॥ पञ्चब्रह्मोपनिषत् ॥

ब्रह्मादिपञ्चब्रह्माणो यत्र विश्रान्तिमाप्नुयुः ।
तदखण्डसुखाकारं रामचन्द्रपदं भजे ॥

ॐ सह नाववतु ॥ सह नौ भुनक्तु ॥ सह वीर्यं करवावहै ॥

तेजस्विनावधीतमस्तु  मा विद्विषावहै ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

हरिः ॐ ॥

अथ पैप्पलादो भगवान्भो किमादौ किं जातमिति । सद्यो जातमिति ।
किं भगव इति । अघोर इति । किं भगव इति । वामदेव इति ।
किं वा पुनरिमे भगव इति । तत्पुरुष इति । किं वा पुनरिमे भगव इति ।
सर्वेषां दिव्यानां प्रेरयिता ईशान इति । ईशानो भूतभव्यस्य
सर्वेषां देवयोगिनाम् । कति वर्णाः । कति भेदाः । कति शक्तयः ।
यत्सर्वं तद्गुह्यम् । तस्मै नमो महादेवाय महारुद्राय प्रोवाच
तस्मै भगवान्महेशः ।
गोप्याद्गोप्यतरं लोके यद्यस्ति श्रुणु शाकल ।
सद्यो जातं मही पूषा रमा ब्रह्मः त्रिवृत्स्वरः ॥ १॥

ऋग्वेदो गार्हपत्यं च मन्त्राः सप्तस्वरास्तथा ।
वर्णं पीतं क्रिया शक्तिः सर्वाभीष्टफलप्रदम् ॥ २॥

अघोरं सलिलं चन्द्रं गौरी वेद द्वितीयकम् ।
नीर्दाभं स्वरं सान्द्रं दक्षिणाग्निरुदाहृतम् ॥ ३॥

पञ्चाशद्वर्णसंयुक्तं स्थितिरिच्छक्रियान्वितम् ।
शक्तिरक्षणसंयुक्तं सर्वाघौघविनाशनम् ॥ ४॥

सर्वदुष्टप्रशमनं सर्वैश्वर्यफलप्रदम् ।
वामदेव महाबोधदायकं पावनात्मकम् ॥ ५॥

विद्यालोकसमायुक्तं भानुकोटिसमप्रभम् ।
प्रसन्नं सामवेदाख्यं नानाष्टकसमन्वितम् ॥ ६॥

धीरस्वरमधीनं चावहनीयमनुत्तमम् ।
ज्ञानसंहारसंयुक्तं शक्तिद्वयसमन्वितम् ॥ ७॥

वर्णं शुक्लं तमोमिश्रं पूर्णबोधकरं स्वयम् ।
धामत्रयनियन्तारं धामत्रयसमन्वितम् ॥ ८॥

सर्वसौभाग्यदं नृणां सर्वकर्मफलप्रदम् ।
अष्टाक्षरसमायुक्तमष्टपत्रान्तरस्थितम् ॥ ९॥

यत्तत्पुरुषं प्रोक्तं वायुमण्डलसंवृतम् ।
पञ्चाग्निना समायुक्तं मन्त्रशक्तिनियामकम् ॥ १०॥

पञ्चाशत्स्वरवर्णाख्यमथर्ववेदस्वरूपकम् ।
कोटिकोटिगणाध्यक्षं ब्रह्माण्डाखण्डविग्रहम् ॥ ११॥

वर्णं रक्तं कामदं च सर्वाधिव्याधिभेषजम् ।
सृष्टिस्थितिलयादीनां कारणं सर्वशक्तिधृक् ॥ १२॥

अवस्थात्रितयातीतं तुरीयं ब्रह्मसंज्ञितम् ।
ब्रह्मविष्ण्वादिभिः सेव्यं सर्वेषां जनकं परम् ॥ १३॥

ईशानं परमं विद्यात्प्रेरकं बुद्धिसाक्षिणम् ।
आकाशात्मकमव्यक्तमोङ्कारस्वरभूषितम् ॥ १४॥

सर्वदेवमयं शान्तं शान्त्यतीतं स्वराद्बहिः ।
अकारादिस्वराध्यक्षमाकाशमयविग्रहम् ॥ १५॥

पञ्चकृत्यनियन्तारं पञ्चब्रह्मात्मकं बृहत् ।
पञ्चब्रह्मोपसंहारं कृत्वा स्वात्मनि संस्थितः ॥ १६॥

स्वमायावैभवान्सर्वान्संहृत्य स्वात्मनि स्थितः ।
पञ्चब्रह्मात्मकातीतो भासते स्वस्वतेजसा ॥ १७॥

आदावन्ते च मध्ये च भासते नान्यहेतुना ।
मायया मोहिताः शम्भोर्महादेवं जगद्गुरुम् ॥ १८॥

न जानन्ति सुराः सर्वे सर्वकारणकारणम् ।
न सन्दृशे तिष्ठति रूपमस्य परात्परं पुरुषं विश्वधाम ॥ १९॥

येन प्रकाशते विश्वं यत्रैव प्रविलीयते ।
तद्ब्रह्म परमं शान्तं तद्ब्रह्मास्मि परमं पदम् ॥ २०॥

पञ्चब्रह्म परं विद्यात्सद्योजातादिपूर्वकम् ।
दृश्यते श्रूयते यच्च पञ्चब्रह्मात्मकं स्वयम् ॥ २१॥

पञ्चधा वर्तमानं तं ब्रह्मकार्यमिति स्मृतम् ।
ब्रह्मकार्यमिति ज्ञात्वा ईशानं प्रतिपद्यते ॥ २२॥

पञ्चब्रह्मात्मकं सर्वं स्वात्मनि प्रविलाप्य च ।
सोऽहमस्मीति जानीयाद्विद्वान्ब्रह्माऽमृतो भवेत् ॥ २३॥

इत्येतद्ब्रह्म जानीयाद्यः स मुक्तो न संशयः ।
पञ्चाक्षरमयं शम्भुं परब्रह्मस्वरूपिणम् ॥ २४॥

नकारादियकारान्तं ज्ञात्वा पञ्चाक्षरं जपेत् ।
सर्वं पञ्चात्मकं विद्यात्पञ्चब्रह्मात्मतत्त्वतः ॥ २५॥

पञ्चब्रह्मात्मिकीं विद्यां योऽधीते भक्तिभावितः ।
स पञ्चात्मकतामेत्य भासते पञ्चधा स्वयम् ॥ २६॥

एवमुक्त्वा महादेवो गालवस्य महात्मनः ।
कृपां चकार तत्रैव स्वान्तर्धिमगमत्स्वयम् ॥ २७॥

यस्य श्रवणमात्रेणाश्रुतमेव श्रुतं भवेत् ।
अमतं च मतं ज्ञातमविज्ञातं च शाकल ॥ २८॥

एकेनैव तु पिण्डेन मृत्तिकायाश्च गौतम ।
विज्ञातं मृण्मयं सर्वं मृदभिन्नं हि कायकम् ॥ २९॥

एकेन लोहमणिना सर्वं लोहमयं यथा ।
विज्ञातं स्यादथैकेन नखानां कृन्तनेन च ॥ ३०॥

सर्वं कार्ष्णायसं ज्ञातं तदभिन्नं स्वभावतः ।
कारणाभिन्नरूपेण कार्यं कारणमेव हि ॥ ३१॥

तद्रूपेण सदा सत्यं भेदेनोक्तिर्मृषा खलु ।

तच्च कारणमेकं हि न भिन्नं नोभयात्मकम् ॥ ३२॥

भेदः सर्वत्र मिथ्यैव धर्मादेरनिरूपणात् ।
अतश्च कारणं नित्यमेकमेवाद्वयं खलु ॥ ३३॥

अत्र कारणमद्वैतं शुद्धचैतन्यमेव हि ।
अस्मिन्ब्रह्मपुरे वेश्म दहरं यदिदं मुने ॥ ३४॥

पुण्डरीकं तु तन्मध्ये आकाशो दहरोऽस्ति तत् ।
स शिवः सच्चिदानन्दः सोऽन्वेष्टव्यो मुमुक्षिभिः ॥ ३५॥

अयं हृदि स्थितः साक्षी सर्वेषामविशेषतः ।
तेनायं हृदयं प्रोक्तः शिवः संसारमोचकः ॥ ३६॥

इत्युपनिषत् ॥

ॐ सह नाववतु ॥ सह नौ भुनक्तु ॥ सह वीर्यं करवावहै ॥

तेजस्विनावधीतमस्तु मा विद्विषावहै ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

इति पञ्चब्रह्मोपनिषत्समाप्ता ॥